तिपुरुषयोरविवेकनिमित्तकः स्वस्वामिभावलक्षणः संबन्ध इति पञ्चशिखः=पञ्चशिखाचार्य्यो मन्यते इत्यर्थः ॥ ६८ ॥

मतान्तरमाह–

**"लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः" ॥६९॥**

प्रकृतेः स्वस्वामिभाव इत्यनुवर्तते। प्रकृतिपुरुषयोः स्वस्वामिभावसंबन्धो लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यो मन्यत इत्यर्थः ॥ ६९ ॥

उपसंहरति ।

**" यद्वातद्वातदुच्छित्तिःपुरुषार्थस्तदुच्छित्तिः पुरुषार्थः" ॥ ७० ॥**

अध्यायपरिसमाप्त्यर्था वीप्सा । यत्तदिति हेत्वर्थकमव्ययम् । प्रकृतेः स्वस्वामिभाव इत्यनुवर्तते । यतो वा ततो वा=कर्मनिमित्ततो वाऽविवेकनिमित्ततो वा, लिङ्गशरीरनिमित्ततो वा बुद्धिसत्त्वप्रकृतिपुरुषयोः स्वस्वामिभावः संबन्धोऽस्तु । सर्वथाऽपि तदुच्छित्तिः=विवेकज्ञानं विना दुरुच्छेद्यस्य तस्य संबन्धस्योच्छेदः पुरुषार्थः=दुःखात्यन्तनिवृत्तिहेतुत्वात्परमपुरुषार्थ इत्यर्थः ॥ ७० ॥

आत्मास्तित्वादिमोक्षान्तो विषयोऽपूर्वयुक्तिभिः ॥
स्थूणान्यायेन तन्त्राख्ये पुनः षष्ठे निरूपितः ॥ १ ॥
कपिलेन प्रणीतेयं वैदिकी सांख्यप्रपा ॥
मया हरिप्रसादेन वृत्त्या सम्यक्परिष्कृता ॥ २ ॥
यत्प्रसादादियं वृत्तिर्नित्यं स्थास्यति निश्चला ॥
महीभावेन वन्द्योऽसौ विद्यादातेश्वरस्सदा ॥ ३ ॥

**इति श्रीमत्परमहंसपरिव्राजकाचार्य्योदासीनवर्य्यात्मारामभगवत्पादशिष्यहरिप्रसादकृतायां सांख्यसूत्रवृत्तौ तन्त्राध्यायः षष्ठः ॥ ६ ॥**

# सांख्यसूत्रवैदिकवृत्तेः शुद्धाशुद्धपत्रम् ।



| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५ | ३ | कस्याप्यमनु | कस्याप्यनु |
| २२ | १६ | तेषा | तत्र सत्त्वं मकाशः,रजःक्रिया, आवरणं तमः,तेषाञ्चमीषा |
| ६१ | ८ | व्यारेत् | व्याहरेत् |
| ८५ | १६ | परहस | परमहस |
| ८५ | ११ | नीजि | जिजी |
| ८८ | ४ | स्तेन | तेन |
| १०६ | १५ | निरस्पति | — निरस्यति |
| १०७ | १६ | सर्व | सर्वं |
| १०८ | ३ | वेदाना | वेदाना |
| १०९ | ७ | ममात्व | ममाणत्व |
| १११ | २७ | त्वादकता | त्पाद्यतः |
| १२१ | १६ | सज्ञा | संज्ञा |
| १३७ | १ | साख्यानां | सांख्याना |
| १४२ | ८ | दोषदर्शनयमनियमादि साधन सङ्ग्रहः | दोषदर्शनादि सङ्ग्रहः |
| १४२ | १५ | नपवापरावराधइ | न पूर्वापरविरोध इ |

क्वचित् तकारस्यद्वित्वमद्वित्वञ्च स्वयमूह्यम्–



